षष्ठ भावमें मुंथा हो तो शरीरमें दुर्बलता शत्रुओंसे संताप बुद्धिका भ्रंश रोगोत्पत्ति चौरादिसे भय करे। सप्तम भावमें मुंथा हो तो स्त्री पुत्र भाई इनसे दु:ख शत्रुका भय धन धर्मका नाश आदि फल करे ।।८।।९।।

वित्तहानिं रिपोर्भीतिं विदेशगमनं तथा ।
रोगोत्पत्तिं करोत्येवं मुंथा रन्ध्रगता सदा ।।१०।।
पदाप्तिं धर्मवृद्धिं च पुत्रस्त्रीसौख्यमेव च ।
भाग्योदयं करोत्याशु मुंथा भाग्यस्थिता यशः ।।११।।

अष्टम भावमें मुंथा हो तो धनहानि शत्रुभय विदेश गमन रोग भय आदि करे। नवम भावमें मुंथा हो तो पदप्राप्ति धर्मवृद्धि पुत्र स्त्रीका सुख भाग्योदय यश आदि शुभ फल करे ।।१०।।११।।

सत्कर्मस्थिरतां मुंथा कीर्त्तिं विद्याधनागमम् ।
परोपकारितां चापि कर्मस्था कुरुते सुखम् ।।१२।।
लाभगा कुरुते मुंथा भोगभाग्योदयं मुदम् ।
आरोग्यतां मनस्तोषं राज्यतश्च धनागमम् ।।१३।।

दशम भावमें मुंथा होवे तब सत्कर्म स्थिरता कीर्ति विद्या धनकी वृद्धि परोपकार सुख करे। एकादश भावमें मुंथा होवे तब भोग विलास भाग्योदय हर्ष आरोग्यता चित्तकी प्रसन्नता तथा राज्यसे धनका लाभ करे ।।१२।।१३।।

व्ययाधिक्यं शरीरार्तिं कुरुते दुष्टसंगतिम् ।
द्रव्यधर्म्मविनाशं च मुंथा द्वादशभावगा ।।१४।।
कुभावे चेत्स्थिता मुंथा वर्षे रिष्टफलप्रदा ।
जपदानादिना कार्या शान्तिस्तस्या हितैषिभिः ।।१५।।

द्वादश भावमें मुंथा स्थित होवे तब अधिक खर्च शरीरकष्ट दुष्टसंगति धन धर्मका नाश करे। अशुभ स्थानमें यदि मुंथा स्थित होवे तब अरिष्ट करती है अत: जप दानादि शांति करना चाहिये ।।१४।।१५।।

अथ मुंथाविशेषफलम्

यदेन्थिहा सूर्यगृहे युता वा सूर्येण राज्यं नृपसंगमंच ।
दत्ते गुणानां परभोगमाप्तिं स्थानान्तरस्येति फलं दृशोपि ।।१६।।

जो मुंथा सूर्यकी राशिकी हो अथवा सूर्य करके युक्त हो तो राज्य सुख अर्थात् राजासे मिलाप कराती है तथा गुणोंकी और परमभोग विलास आदिका सुख कराती है ॥१६॥

**चंद्रेण युक्तेन्दुगृहेऽथ दृष्टेन्दुनापि वा धर्मयशोभिवृद्धिम् ।**
**नैरुज्यसंतोषमतिप्रवृद्धि ददाति पापेक्षिततोऽतिदुःखम् ॥१७॥**

जो मुंथा चंद्रमा करके युक्त हो अथवा चंद्रमाकी राशिकी हो अथवा चंद्रमा उसे देखता हो तो धर्म और यशकी वृद्धि निरोगता और बुद्धिकी वृद्धि अधिक संतोष हो। जो पापग्रह देखता हो तो अत्यन्त दुःखको देती ॥१७॥

**कुजेन युक्ता कुजभे कुजेन दृष्टा च पित्तोत्थरुजं तनोति ।**
**शस्त्राभिघातं रुधिरप्रकोपं सौरीक्षिता सौरिगृहे विशेषात् ॥१८॥**

जो मुंथा मंगलकरके युक्त हो मंगलकी राशिकी हो अथवा मंगल उसे देखता हो तो पित्तोत्पन्न रोगको विस्तार करती है और उस वर्षमें शस्त्रसे घाव तथा रुधिरपीडा होय और शनि देखता हो अथवा शनिकी राशिकी हो तो इस फलको विशेष करती है ॥१८॥

**बुधेन शुक्रेण युतेक्षितापि तद्भेऽपि वा स्त्रीमतिलाभसौख्यम् ।**
**धर्मं यशश्चाप्यतुलं विधत्ते कष्टं च पापेक्षणयोगतः स्यात् ॥१९॥**

जो मुंथा बुध शुक्र करके युक्त हो अथवा बुध शुक्र उसे देखते हों अथवा बुध शुक्रकी राशिकी हो तो स्त्री, बुद्धि, लाभ, सुख, धर्म और अधिक यशको करती है और जो पापग्रह करके देखी गई हो तो तथा उनके साथ हो तो कष्ट हो ॥१९॥

**युतेक्षिता वा गुरुणा गुरुर्भे यदेन्थिहा पुत्रकलत्रसौख्यम् ।**
**ददाति हेमाम्बररत्नभोगं भूसेत्थशालादिहराज्यलाभः ॥२०॥**

जो मुंथा गुरुके साथ हो गुरुकी राशिकी हो अथवा गुरु उसको देखता हो तो पुत्र स्त्रीका सुख हो और सुवर्णवस्त्र और रत्नकी लाभ कराती है और ग्रहसे इत्थशाल हो तो राज्यसे लाभ हो ॥२०॥

**शनेर्गृहे तेन युतेक्षिता वा यदेन्थिहा वातरुजं विधत्ते ।**
**मानक्षयं वह्निभयं धनस्य हानिं च गुरुवेक्षणतः शुभाप्तिम् ॥२१॥**

जो मुंथा शनिकी हो अथवा उसके साथ हो अथवा शनि उसे देखता

हो तो वातरोगको करती है और वर्षमें मानहानि हो अग्निसे भय धनकी हानि हो जो बृहस्पति देखता हो तो शुभफल हो ।।२१।।

तमोमुखेचेन्मुथहा धनाप्ति यशः सुखं धर्मसमुन्नतिं च ।
सितेज्ययोगेक्षणतः पदाप्तिं सुवर्णरत्नाम्बरलब्धयश्च ।।२२।।

जो मुंथा राहुके मुख में हो तो धनकी प्राप्ति यश, सुख औ इनकी वृद्धि हो और जो बृहस्पति शुक्र साथ हो अथवा देखते हों तो पदकी प्राप्ति और सुवर्ण रत्न तथा वस्त्र इनका लाभ हो ।।२२।।

तत्पृष्ठभागेन शुभप्रदा स्यात्तत्पुच्छभागे रिपुभीतिदुःखम् ।
पापेक्षणादर्थसुखस्य हानिश्चेज्जन्मनीत्थं गृहवित्तनाशः ।।२३।।

यदि मुंथा राहुके पृष्ठ भागमें हो तो शुभ फल नहीं देती है और जो पुच्छ भागमें अर्थात् केतुके साथ हो तो शत्रुसे भय और दुःख करती है और पापग्रह उसे देखते हों तो धन और सुखकी हानि हो और इसी प्रकार जन्ममें हो तो घर और धनका नाश हो ।।२३।।

अथ मुंथेशफलम्

मुंथाधिपो व्ययविनाशगतो विवीर्यो दुष्टग्रहस्त्वशुभवर्गगतोऽब्दकाले कष्टं नृणां परिकरोति भयं विवादं लोकैस्तथा निजजनैः कलहं नितान्तम् ।।२४।।

जो मुंथेश द्वादश और अष्टमस्थानमें बलकरके हीन हो अथवा पापग्रह पापग्रहके वर्ग में हो तो उस वर्षमें मनुष्योंको कष्ट भय मनुष्योंके साथ विवाद और अपने निजजनोंके साथ अत्यन्त कलह करता है ।।२४।।

भाग्ये च लाभे सहजे च केन्द्रे चेद्वर्षकाले मुथहाधिनाथः ।
करोति पुंसां विपुलं प्रतापं मैत्री नृपैः सम्मतिवर्द्धनं च ।।२५।।

---

१ भोग्या राहोर्लवास्तस्य मुखं पृष्ठं गता लवाः । ततः सप्तमभं पुच्छं विमृश्येति फलं वदेत् ।।१।। अर्थ–राहुके भोग्य अंश मुख है और गत अंश पृष्ठ है और उससे सातवीं राशि पुच्छ है अर्थात् केतुके साथ हो तो पुच्छ है ऐसा विचार कर फल कहे ।।२।। जन्ममें भी मुंथा देखते हैं यह ग्रंथान्तरका मत है ।।

जो वर्षकुंडलीमें मुंथेश नवम, लाभ, तृतीय और केंद्र में स्थित हो तो मनुष्योंका अधिक प्रताप हो राजाओंके साथ मित्रता और श्रेष्ठ बुद्धिकी वृद्धि हो ।।२५।।

---

# अथ त्रिराशिपानयनम्

**दिने त्रिराशिपाः ख्याता रविशुक्रार्किभार्गवाः ।**
**वागीशेन्दुबुधक्ष्माजानिशि मेषात्प्रकीर्त्तिताः ।।१।।**
**सिंहादिभे विलोमाश्च ज्ञातव्या वै त्रिराशिपाः ।**
**मंदभौमेज्यचंद्रास्तु नित्यं शेषेषु राशिषु ।।२।।**

जो दिनमें वर्षका प्रवेश होय तो क्रमसे मेष आदि चार राशियोंके स्वामी सूर्य शुक्र शनि और शुक्र त्रिराशिप होते हैं और रात्रि में इन्हीं चारोंके वृहस्पति चंद्रमा बुध और मंगल क्रमसे त्रिराशिप होते हैं और सिंहसे वृश्चिक-तक पहले कहे हुए ग्रहके विपरीत त्रिराशिप होते हैं अर्थात् दिनमें जो त्रिराशिप पहले कहे हैं वह रात्रि में होते हैं और रात्रिके दिन में होते हैं। शेष राशियोंके त्रिराशिप रात और दिनमें एकसे क्रमसे शनि मंगल गुरु और चंद्रमा होते हैं ।।१।।२।।

त्रिराशिपचक्रम्

| राशि. | मेष. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| दिन. | सू. | शु. | श. | शु. | वृ. | चं. | बु. | मं. | श. | मं. | वृ. | चं. |
| रात्रि. | वृ. | चं. | बु. | मे. | सू. | शु. | श. | शु. | श. | मं. | वृ. | चं. |

**रविक्रांतभयो घस्रे दिनेशोऽब्दप्रवेशने ।**
**रात्रीशो निशिवेशे स्याच्चंद्राधिष्ठितराशिपः ।।३।।**

जो दिनमें वर्षका प्रवेश होय तो जिस राशि में सूर्य होय उसी राशिका स्वामी दिनेश होता है । और जो रात्रि में वर्ष प्रवेश लग्न हो तो जिस राशिमें चंद्रमा वैठा होय उस राशिका स्वामी राशिपति होता है ।।३।।

अथ वर्षेशनिर्णयः

**जन्मवर्षपती मुंथानाथो रात्रिपतिस्तथा ।**
**त्रिराशिपो दिनेशश्च वर्षेशज्ञानहेतवे ॥४॥**
**एकचक्रे समालिख्य पश्येत्तेषां बलाबलम् ।**
**बलाधिकस्तनुं पश्यन्सज्ञेयो वर्षपो बुधैः ॥५॥**

जन्मलग्नका स्वामी वर्षलग्नका स्वामी मुंथाका पति और त्रिराशिपति रात्रिपति या दिनपति ये सब वर्षेश जाननेके निमित्त हैं ।

पांचोंको एक चक्रमें लिखकर उनके बलाबलको देखे इनमेंसे जो कोई बल में अधिक अर्थात् बलवान् होकर लग्नको सबसे अधिक दृष्टिसे देखता होय उसीको वर्षेश समझना चाहिये जो दृष्टिकी समता होय और पांचों ग्रहोंका बल बरावर होय तो मुंथेश वर्षपति हो सकता है और जो कोई भी ग्रह लग्नको न देखता होय तो सबमें जो बलवान् होय सो वर्षका पति होता है और जो बलमें सब बरावर होय तो दिन में प्रवेश होनेसे जिस राशिमें सूर्य होय उसका पति वर्षेश होता है, यदि रात्रिमें वर्षप्रवेश होय तो जिस राशिका चंद्र होय उसका स्वामी वर्षेश होता है । जो चंद्र पांचों ग्रहों में से किसीसे इत्थाशाल करता होय तो उसेही वर्षपति कहना चाहिये और इसके अभाव में जिस राशिमें चंद्रमा हो उसका स्वामी वर्षेश होता है ॥४॥५॥

अथ वर्षेशफलनिरूपणम्

**व्ययारिरन्ध्रप्रमितांस्तु भावान्विहाय चेद्वर्षपतिः स्थितः स्यात् ।**
**परेषु भावेषु ददाति वित्तं सुखं च राज्याश्रयतो बलिष्ठः ॥६॥**

वर्षेश छठे आठवें और बारहवें भावको छोडकर और किसी भावमें स्थित होय तो धन सुख और राज्यसे उत्तम सुख आदिको देता है ॥६॥

तत्रादौ रविफलम्

**स्वोच्चादिगो वर्षपतिश्च भानुर्बली प्रतिष्ठां रिपुनाशमाशु ।**
**कीर्त्तिं विशालां सुतवित्तलाभं सुखं प्रभूतं कुरुते पदाप्तिम् ॥७॥**
**मध्यश्च पूर्वोक्तफलं च मध्यं ददाति कार्श्यं धनहानिमेवम् ।**
**नीचो विदेशे गमनं च दुःखं जनापवादं रिपुभीतिमाशु ॥८॥**

वर्षेश सूर्य यदि बलवान् अपने उच्चराशिका हो तो सुख पुत्र और धनका लाभ सन्मान प्रतिष्ठा यश और शत्रुनाश आदि फलको करता है। मध्यबली होय तो पूर्वोक्त फल मध्यम लोगोंसे विरोध धनहानि और निर्बलताको करता है और नीचबल होय तो परदेश गमन धनहानि शत्रुभय आलस्य दुःख और निन्दा आदि फलको करता है ॥७॥८॥

अथ चंद्रफलम्

**चंद्रेऽब्दपे स्वर्क्षगते धनाप्तिः स्त्रीपुत्रमित्रादिसुखं प्रतिष्ठा ।**
**मैत्री नवीना सुजनैश्च सार्धं स्याद्वै बलिष्ठे च शरीरपुष्टिः ॥९॥**
**मध्ये भवे दुर्बलता रुजाप्तिः सर्वं फलं पूर्वगतं च मध्यम् ।**
**नीचे शशाङ्के धनधान्यनाशो वातादिवृद्धिः कृशता शरीरे ॥१०॥**

बलवान् चंद्रमा अपने राशिका होकर वर्षेश होय तो धन, स्त्री, पुत्र, मित्र आदिसे सुख प्रतिष्ठा पदलाभ, उत्तम जनोंसे मित्रता और शरीर पुष्टि होती है और जो मध्यम बली होय तो पूर्वोक्त फल मध्यम दुर्बलता और रोग आदि होता है। यदि जो नीचका होय तो वातरोगकी वृद्धि धन धान्यका नाश और शरीर में कृशता होती है ॥९॥१०॥

अथ भौमफलम्

**भौमेऽब्दपे स्वर्क्षगते बलिष्ठे कीर्तिर्भवेच्छत्रुविनाशनं च ।**
**सेनापतित्वं द्रविणागमश्च मित्रादिसौख्यं सततं जनानाम् ॥११॥**
**मध्येऽतिरोगो रुधिरप्रकोपो निन्दाक्षती दुःखततिश्च तीव्रा ।**
**नीचे भवेच्छत्रुभयं च बुद्धिह्रासोऽग्निचौरातिभयं रुजाप्तिः ॥१२॥**

जो बलवान् मंगल अपने राशिका होकर वर्षेश होय तो यश, शत्रुनाश, सेनापतित्व, प्रतिष्ठा, धनलाभ और मित्र आदिसे सुख होता है और जो मध्य बली होय तो रोग, रुधिरका विकार, निन्दा और हानि तथा तीव्र दुःख होता है। नीचका होय तो शत्रु, चोर, अग्निसे भय, निन्दा, बुद्धिका नाश, रोग आदि होवे ॥११॥१२॥

अथ बुधफलम्

**स्वोच्चादिगे वर्षपतौ बुधे तु विद्यां पदाप्तिर्जयवित्तलाभः ।**
**सौख्यं च राज्याश्रयतो भवेद्वै कीर्त्तिर्बलिष्ठे विविधा प्रतिष्ठा ॥१३॥**

मध्ये तु पूर्वोक्तफलं च मध्यं नीचे भवेद्‌बुद्धिविपर्ययश्च ।
धर्म्मार्थहानिः कलहश्च साकं मित्रैः सुतैश्चापि पराजयः स्यात्‌॥१४॥

बुध जो बलवान्‌ अपने उच्च राशिका होकर वर्षपति होय तो विद्या, लाभ, जय, धनलाभ, राज्यसन्मान, उत्तम पदका लाभ आदि करता है। और जो मध्यम होय तो पहिले कहा हुआ फल मध्यम करता है। यदि अधम होय तो बुद्धिविनाश, धन, धर्मका नाश, बलहानि, पराजय, मित्र तथा पुत्रोंमें विरोध होता है ॥१३॥१४॥

अथ गुरुफलम्‌

स्वोच्चस्थिते देवगुरौ बलिष्ठे कुटुंबसौख्यं धनकीर्त्तिलाभः ।
पुत्रप्रतिष्ठा निधिलाभ एव भवेत्सदा वर्षपतौ पदाप्तिः ॥१५॥
सर्वं फलं मध्यमिदं च मध्ये कृच्छ्रार्थलाभो रमणीवियोगः ।
नीचस्थिते वित्तसुसौख्यधर्म्मह्रासोभवेत्स्त्रीसुतबन्धुदुःखम्‌ ॥१६॥

गुरु जो बलवान्‌ होकर अपने उच्च राशिका होकर वर्षपति हो तो कुटुंबका सुख, धन, यश, पुत्र और गई हुई वस्तुका लाभ तथा प्रतिष्ठा आदि फल देता है। और मध्यम बली होय तो सब फल मध्यम होय, धनका कठिनतासे लाभ और स्त्रीका वियोग होवे और जो नीचका अधम बली होय तो धन सुख और धर्मकी हानि पुत्र स्त्री और कुबटुंबसे दुःख होता है ॥१५॥॥१६॥

अथ भृगुफलम्‌

शुक्रे ऽ दये स्वोच्चगते बलिष्ठे भूक्षेत्रलाभो वनिताविलासः ।
रोगप्रशान्तिर्द्रविणागमश्च राज्याद्भवेत्सौख्यमहर्निशं वै ॥१७॥
मध्येऽर्थ हानिर्बहुदुःखजातं भवेदिदं सर्वफलं च मध्यम्‌ ।
नीचस्थिते स्त्रीसुतमित्रवैरं निन्दा च नित्यं निजवृत्तिनाशः ॥१८॥

शुक्र जो बलवान्‌ अपने उच्च राशिका होके वर्षपति हो तो रोगनाश, सुख, भूमिलाभ, स्त्रीसे विलास, धनका लाभ और निरंतर राजासे सुखकी प्राप्ति करे। जो मध्यमबली होय तो यह सब फल मध्यम होय तथा धनहानि बहुत दुःख आदि करे। जो नीचका हो तो मनको दुःख निन्दा

जीविकानाश, स्त्री, पुत्र और मित्रोंसे विरोध आदिकी प्राप्ति करता है ।।१७।।१८।।

अथ शनिफलम्

मन्देऽब्दपे स्वोच्चगते बलिष्ठे नवीनभूक्षेत्रगृहादिलाभः ।
आरोग्यमारामतडागवापीविधौ व्ययःस्याच्च कुलप्रतिष्ठा ।।१९।।
मध्ये फलं सर्वमिदं च मध्यं कृच्छ्राद्धनाप्तिस्तु भवेद्धि निन्दा ।
नीचस्थिते हीनबले च मंदे कार्य्यार्थनाशो रिपुतो भयं स्यात् ।।२०।।
स्त्रीपुत्रमित्रैः स्वजनैश्च साकं नित्यं भवेद्वै कलहश्च दुःखम् ।
इत्थंफलं वर्षपतेर्मया हि प्राचीनरीत्या कथितं विविच्य ।।२१।।

शनैश्चर अपने उच्च राशिका बलवान् होकर वर्षपति हो तो नवीन भूमि गृह और धनका लाभ आरोग्यता, बाग, तालाव, बावडी आदिके बनानेमें धनका खर्च और कुलमें प्रतिष्ठा आदि करता है और मध्यम बली होय तो यह सब फल मध्यम और दुःखसे धनका लाभ तथा अनादर आदि फलको देता है। यदि नीच अर्थात् हीनबल होय तो कार्यका नाश धनकी हानि और शत्रुसे भय होय तथा स्त्री, पुत्र और मित्रोंसे विरोध तथा दुःखको करता है। इस प्रकार मैंने वर्षके स्वामियोंका फल प्राचीन रीतिसेही शास्त्रोंको देखकरके कहा है ।।१९।।२०।।२१।।

---

# अथ मुद्दादशासाधनम्

जन्मर्क्षवृन्दैः क्रमशो गताब्दा युक्ता द्विहीना नवभिर्विभक्ताः ।
शेषाङ्कपा वै रविचंद्रभौमराह्विज्यमन्देन्दुजकेतुशुक्राः ।।१।।

गत वर्षोंमें अश्विनी आदि नक्षत्रसे गिनकर जन्मकालकी नक्षत्र संख्या जोड देवे फिर दो घटा करके उसमें नौका भाग देवे जो अंक शेष बचे उनके स्वामी क्रमसे सूर्य, चंद्रमा, मंगल, राहु, गुरु, शनि, बुध, केतु और शुक्र होते हैं अर्थात् एक बचे तो सूर्य, दो बचे तो चंद्रमा ऐसेही नव अंकतक क्रमसे जानना चाहिये ।।१।।

**सूर्यस्य षट् चंद्रमसो दशैव भौमस्य सप्ताङ्गभुवो गुरुश्च ।**
**अद्रीन्दवश्चंद्रसुतस्य केतोः सप्तेह शुक्रस्य खयुग्मसंख्या ।।२।।**
**गोभूमयः सूर्यसूतस्य राहोर्नगेन्दवो वर्षगणा हि भुक्तेः ।**
**स्वभुक्तिवर्षाणिगुणैर्हतानि दिनानि वर्षे खचरस्य भुक्तिः ।।३।।**

सूर्यकी भुक्ति छः वर्ष, चंद्रमाकी दश वर्ष, मंगलकी सात, गुरुकी सोलह, बुधकी सत्रह, केतुकी सात, शुक्रकी बीस, शनिकी उन्नीस और राहुकी अठारह वर्ष तक भुक्ति (भोग) है। उक्त वर्षोंमें उक्त ग्रहोंकी महादशा रहती है. अत्र जिस ग्रहकी वर्षदशा निकालनी होय उस ग्रहकी वर्षसंख्याको तीनसे गुणा करनेसे वर्षमें ग्रहकी दिनात्मक दशा होती है। उदाहरण–जैसे सूर्यकी दशा छः वर्षतक रहती है इस हेतु छःको तीनसे गुणा किया तो अठारह हुए बस वर्षमें अठारह दिनकी दशा सूर्यकी होती है, इसी क्रमसे आगे भी जानना चाहिये ।।२।।३।।

अथ विंशोत्तरीमहादशाचक्रम्

| सू. | चं. | मं. | रा. | गु. | श. | बु. | के. | शु. | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|
| ६ | १० | ७ | १८ | १६ | १९ | १७ | ७ | २० | वर्षसंख्या. |

अथैकवर्षमध्ये ग्रहाणां दशाचक्रम्

| सू. | चं. | मं. | रा. | गु. | श. | बु. | के. | शु. | ग्रहाः |
|---|---|---|---|---|---|---|---|---|---|
| ० | १ | ० | १ | १ | १ | १ | ० | २ | मासाः |
| १८ | ० | २१ | २४ | १८ | २७ | २१ | २१ | ० | दिनानि |

अथ मुद्दादशाफलम्

**सूर्ये राजकुलाद्भीतिः पीडा स्यात्पित्तसंभवा ।**
**विपत्तयश्च बंधूनां वित्तानां व्यय एव च ।।४।।**

सूर्यकी मुद्दादशामें राजकुलसे भय पित्तसे पीडा भाइयोंकी विपत्ति और धनका खर्च हो ।।४।।

चान्द्रयां स्त्रीसुतभूलाभो वस्त्राभरणसंयुतम् ।
स्वपक्षवैरं कन्याथा जन्म निद्रारतिस्तथा ।।५।।

चंद्रमाकी दशामें स्त्री, पुत्र, भूमि इनका लाभ हो वस्त्र और आभूषणों-से युक्त हो अपने पक्षमें वैर हो कन्याका जन्म और निद्रामें रत हो ।।५।।

भौमे शत्रुविमर्दश्च विग्रहो बांधवैः सह ।
रक्तपित्तकृता पीडा परस्त्रीभिःसमागमः ।।६।।

मंगलकी दशा हो तो शत्रु मर्दन भाइयोंसे विग्रह रक्तपित्तकी पीडा और परस्त्रीसे समागम हो ।।६।।

बौध्यां बंधुसमायोगो मित्रधर्मसमागमः ।
प्रीतिर्जनस्य विपुला देहपीडा त्रिदोषजा ।।७।।

बुधकी दशा हो तो भाइयोंका समागम, मित्र और धर्मका समागम; मनुष्योंसे बहुत प्रीति और त्रिदोषपीडा हो ।।७।।

जैव्यां मानधनप्राप्तिर्देवब्राह्मणपूजनम् ।
कर्णरोगस्तथा वैरं स्वजनैश्च कलिर्भवेत् ।।८।।

गुरुकी दशा हो तो धन, मानकी प्राप्ति देव ब्राह्मणोंका पूजन कर्णरोग तथा सज्जनोंसे कलह और वैर होवे ।।८।।

शौक्यां स्त्रीसंगमो लाभो वस्त्राभरणसंयुतः ।
कौशल्यं महती कीर्त्तिर्धनलाभश्च जायते ।।९।।

शुक्रकी दशा हो तो स्त्रीके संगमसे लाभ हो वस्त्राभरणसे युक्त हो कौशल्य बहुत कीर्त्ति और धनका लाभ हो ।।९।।

शनैश्चर्य्यां देहपीडा पुत्रदारैश्च विग्रहः ।
तन्द्राश्रमो बुद्धिनाशो विदेशगमनं भवेत् ।।१०।।

शनिकी दशा हो तो देहमें पीडा, स्त्री पुत्रसे विग्रह, आलस्य परिश्रम बुद्धिका नाश और विदेश गमन हो ।।१०।।

स्वर्भानौ जायते दुःखं वधूतश्चात्मनो रुजः ।
देशान्तरेषु गमनं धननाशोऽरिविग्रहः ।।११।।

राहुकी दशामें वधूसे दुःख हो, शरीरमें रोग, देशांतरगमन और धनका नाश एवं शत्रुसे विग्रह हो ।।११।।

---

# अथ मासदिनप्रवेशकालः

जन्मार्कांशेन तुल्यःस्याद्यदा तात्कालिको रविः।
तदा मासप्रवेशश्चेद्द्युप्रवेशः कलासमः ॥१॥

जब वर्तमान समयका स्पष्ट सूर्यका अंश जन्मकालके स्पष्ट सूर्यके अंशोंके समान होय तो मासका प्रवेश होता है और कलाके समान होय तो दिनका प्रवेश होता है ॥१॥

अथ मासप्रवेशानयनम्

कार्य्यं तु स्फुटपंक्तिस्थसूर्ययोरन्तरं मिथः।
पंक्त्यासन्नार्कगत्या च समं कृत्वा मिथो बुधः ॥२॥
हरेदंशादिकं तद्धि फलं ज्ञेयं दिनादिकम्।
स्फुटार्कांशादि शुध्येच्चेत्पंक्तिस्थे तु रवौ तदा ॥३॥
फलं विशोधयेत्सम्यग्मिश्रमाने बुधः सदा।
अन्यथा योजयेत्तत्र स्फुटार्कात्पंक्तिगे लघौ ॥४॥

स्पष्टसूर्य और पंचाङ्गका निकटवर्त्ती पंक्तिस्थ सूर्य इन दोनोंका आपस में अंतर करे और आसन्न पंक्तिके सूर्यकी गतिका आपसमें सर्वणित कर उस सर्वणित अंतरमें भाग देनेसे जो लब्धि मिले उसे निश्चय दिन घटी आदि फल जानना चाहिये। जो स्पष्ट सूर्यके अंश आदि पंक्तिवाले सूर्यके अंश आदिमें घटनेसे घट जावे तो पूर्वोक्त फलको मिश्रमानमें भली भांति घटावे और जो स्पष्ट सूर्यसे पंक्तिवाला सूर्य न्यून अर्थात् पंक्तिका सूर्य स्पष्ट सूर्यमें घट जावे तो पूर्वोक्त फलको मिश्रमान में जोड देवे तो दिन आदिक फल होता है ॥२॥३॥४॥

एवं दिनादिकं यत्स्यात्तदिष्टं परिकीर्त्तितम्।
उदयोक्तविधानेन लग्नं साध्यं बुधेन वै ॥५॥
तत्र मासप्रवेशः स्यादेवं कार्य्यं पुनः पुनः।
इत्थं द्वादशमासानां निवेशः साध्यतां बुधैः ॥६॥

इस प्रकार जो दिन, घटी आदि होय उन्हें इष्ट काल कहते हैं, फिर लग्न लानेका जो प्रकार पहले लिख आये हैं उसी रीतिसे पण्डित लोग

लग्नका साधन करै उसी लग्नमें मासका आरंभ होता है ऐसेही बार बार करना चाहिये इसी भांति विद्वानोंको बारह महीनोंके मास प्रवेश काल निकालना चाहिये ।।५।।६।।

---

# अथ मासेशफलम्

महीशाद्धनाप्तिर्महामानलाभो मनःसंप्रमोदः सदा मानवानाम् ।
दिगंतप्रचारं यशः स्यान्नितांतं भवेन्मासनाथो यदा घस्रनाथः ।।१।।

सूर्य मासका पति हो तो राजासे धनकी प्राप्ति, महत्वकी वृद्धि, मनमें हर्ष और मनुष्योंका निरंतर देशांतरोंमें यशका प्रचार करे ।।१।।

मुक्ताहारश्वेतवस्त्रादिलाभः स्वीयाल्लोकाद्भूपतेः सौख्यप्राप्तिः।
वित्तं तीर्थासक्तियुग्मानवानां मासाधीशो यामिनीशो यदा स्यात् ।२।

चंद्रमा मासपति हो तो मोतियोंके हार श्वेत वस्त्रोंका लाभ आत्मीय जनोंसे और राजासे सुखकी प्राप्ति धनागम तथा तीर्थयात्रा आदि शुभ फल करे ।।२।।

द्रविणशोणितवस्तुसमागमो जययुतो हि ततः समराजिरे ।
भवति मंगलमंडितमंदिरं तनुभृतां यदि मासपमंगलः ।।३।।

मंगल मासपति हो तो धन एवं रक्त वस्तुकी प्राप्ति संग्राममें विजय और गृहमें सर्वत्र मंगल होवे ।।३।।

नानाविलासं वरवस्त्रलाभं धनागमं भूपतितो नितांतम् ।
कुर्यान्नराणां विपुलां च कीर्तिं मासाधिनाथः शशिजो नितांतम् ।।४।।

बुध मासपति हो तो अनेक प्रकारके भोग विलास एवं सुंदर वस्त्रोंका लाभ निरंतर राजासे धनका लाभ और मनुष्योंकी बहुत कीर्त्ति होय ।।४।।

वृंदारकार्चानिरतो नितांतं वंद्याभिभूताखिलशूरलोकम् ।
धत्ते पुमांसं धिषणाभियुक्तं मासाधिनाथो धिषणाभिधानः ।।५।।

गुरु मासपति हो तो देवकार्यमें निरत एवं सब लोक नमन करें और श्रेष्ठबुद्धि होय ।।५।।

निजजनाभिहतावरतान्वितो रतिविधानविचक्षणमानसः ।
हरति वारिगणे विहितोक्षितो भृगुसुते यदि मासपतौ स्थिते ।।६।।

शुक्र मासका पति हो तो अपने कुटुंबियोंमें अधिक आदर होय एवं कामक्रीडामें मन अधिक लगा रहै तथा जलक्रीडामें निरत रहै ।।६।।

नरेशात्सदा प्राप्तमानो नरः स्याल्लताभूरुहारोपणे सक्तचित्तः ।
विलासान्वितो वैरिमानप्रमाथी प्रभुत्वं प्रयातः शनिर्यत्र मासे ।।७।।

शनि मासेश्वर हो तो मनुष्य सदा राजासे मान प्राप्त करे तथा वृक्षादिक लगानेमें मन आसक्त रहै हास्य विलासमें मन रहै और शत्रुओंका मद दूर करनेमें समर्थ होवे ।।७।।

---

# अथ तन्वादिभावगतमासेशफलम्

मासेश्वरो लग्नगतः करोति धनागमं संततिमेव सौख्यम् ।
कर्मोदयं बाहुबलप्रतापं शत्रुक्षयं स्यात्खलु राजमान्यम् ।।१।।

मासपति यदि लग्नमें हो तो धनका लाभ और संतानका सुख हो तथा भाग्योदय बाहुबलका प्रताप एवं शत्रुका नाश और राजासे मान प्राप्त होवे ।।१।।

मासेश्वरः कोशगतः करोति द्रव्यागमंबाहुबलप्रमोदम् ।
धनागमं वाहनमंदिराणि युक्तेक्षितो वा शुभखेचरेन्द्रैः ।।२।।

मासपति द्वितीय स्थानमें हो तो धनका लाभ बाहुबल हर्ष एवं सवारी मकान आदि शुभ ग्रहोंसे युक्त या दृष्ट होय तो यह सब होय ।।२।।

भवति मासपतिः सहजे यदा निजपराक्रमसिद्धिकरस्तदा ।
निजसहोदरदेहसुखं भवेत्खलखगैः सहितो न च वीक्षितः ।।३।।

मासपति तृतीय स्थानमें पाप ग्रहोंसे युक्त वा दृष्ट न होय तो निज पराक्रम द्वारा सिद्धि करे और भाईके शरीरमें सुख करे ।।३।।

मासे यदा मासपतिश्चतुर्थो भवेत्तदा वाहनहेमलाभः ।
सत्संगतिं ब्राह्मणदेवभक्तिं युक्तेक्षितो वा खलु सौम्यखेटैः ।।४।।

मासपति चतुर्थ स्थानमें शुभग्रहोंसे दृष्ट वा युक्त होय तो सवारी एवं सुवर्णका लाभ करे तथा सत्संगति ब्राह्मण देवतामें भक्ति आदि करे ।।४।।

मासेश्वरः पंचमगः करोति धनागमं संततिमेव सौख्यम् ।
स्त्रीणां विलासं रिपुरोगनाशं सुखार्थसिद्धिं तनुतेऽत्र मासे ॥५॥

मासपति पंचम भावमें हो तो धनागम और संतानका सुख करता है स्त्रीसे विलास शत्रु और रोगका नाश तथा सुख एवं अर्थकी सिद्धि करता है ॥५॥

मासेश्वरःशत्रुगतः करोति रोगागमं वाहनवित्तहानिः ।
शत्रूदयः कार्यकृता न सिद्धिः प्रमेहपीडा कथिता मुनीन्द्रैः ॥६॥

मासपति छठे भाव में हो तो रोग हो और वाहन एवं धनकी हानि हो तथा शत्रुका उदय कार्य्यका नाश और प्रमेह पीडा होवे ऐसा मुनिजन कहते हैं ॥६॥

कलत्रगो मासपतिर्यदा स्याज्जायाविलासं कुरुते सदाऽसौ ।
व्यापारसिद्धिं धनधान्यमुच्चैर्युक्तेक्षितश्चेत्खलु सौम्यखेटैः ॥७॥

मासपति सप्तम स्थान में शुभग्रहोंसे युक्त या दृष्ट हो तो स्त्रीका सुख करे व्यापार में सिद्धि करे तथा धान्यकी वृद्धि करे ॥७॥

मासेश्वरो मृत्युगतः करोति वपुःप्रणाशं बलबुद्धिनाशम् ।
रमावियोगं सुतबंधुखेदमितस्ततः संभ्रमणं करोति ॥८॥

मासपति अष्टम भावमें हो तो शरीरकी हानि बल बुद्धिकी हानि लक्ष्मी-का वियोग और पुत्र भाईको खेद तथा देश विदेशमें भ्रमण करे ॥८॥

मासेश्वरो भाग्यगतो नराणां भाग्योदयं धर्मविवर्धनं च ।
स्त्रीणां विलासं खलु मित्रलाभं संतान सौख्यं प्रकरोति नूनम् ॥९॥

मासपति नवम भाव में हो तो भाग्योदय तथा धर्मकी वृद्धि स्त्रीविलास मित्रलाभ और संतानसुख करता है ॥९॥

कर्मस्थितो मासपतिर्नराणां करोति संतानसुखंप्रतापम् ।
स्त्रीणां विलासं धनधान्यलाभं सर्वार्थलाभं कथितं मुनीन्द्रैः ॥१०॥

मासपति दशम भावमें हो तो पुत्रसुख प्रतापकी वृद्धि करे स्त्रियोंका विलास और धन धान्यका लाभ तथा सर्वार्थकी सिद्धि करे ऐसा मुनिजन कहते हैं ॥१०॥

लाभे भवेन्मासपतिर्नराणां यदा तदा स्याद्वितत्तं च लाभम् ।
कान्तासुखं सद्मसुखं विलासं युक्तेक्षितः सौम्यखगैः प्रमोदम् ॥११॥

मासपति लाभस्थानमें हो तो बहुतही लाभ करे स्त्रीका सुख घरका सुख विलास और हर्ष करे यदि शुभ ग्रहोंसे युक्त वा दृष्ट हो तो ॥११॥

व्ययस्थितो मासपतिः करोति धनव्ययं धान्यविनाशनं च ।
शिरोऽङ्गपीडां सुतसौख्यनाशं जायादिकष्टं रिपुविग्रहं च ॥१२॥

मासपति बारहवें भावमें हो तो धनका खर्च और धान्यका नाश करे मस्तकमें एवं शरीरमें पीडा और पुत्र सुखकी हानि तथा स्त्री आदिको कष्ट शत्रुका विग्रह करे ॥१२॥

---

## अथ मासे भावगतमुंथाफलम्

शरीरेऽति सौख्यंसुतेभ्यः प्रमोदं सुखं कामिनीकेलिजं मित्रलाभम् ।
नरेशाद्धनाप्तिं यशोवृद्धिर्नित्यं नृणां लग्नगा मासवेशे विधत्ते ॥१॥

मासकुंडली में मुंथा लग्नमें हो तो शरीरमें सुख पुत्रोंसे हर्ष और स्त्रीके भोग विलासका सुख मित्रका लाभ एवं राजासे धनका लाभ तथा यशकी वृद्धि होवे ॥१॥

मतिं निर्मलां नित्यमिष्टान्नभोगं विनाशं रिपूणां नृपाद्वित्तलाभम् ।
सुहृद्भिः सुखं मुंथहा वित्तगा चेन्नराणां हि मासप्रवेशे विधत्ते ॥२॥

यदि मासप्रवेशमें मुंथा द्वितीय स्थान में हो तो श्रेष्ठ बुद्धि नित्य मिष्टान्न भोजन शत्रुओंका नाश राजासे धनका लाभ मित्रोंसे सुख करे ॥२॥

नानाविलासं स्वीयवर्गातिसौख्यं सुखं बंधुतः पौरुषस्यापि वृद्धिम् ।
धरेशाद्धनं विक्रमे मुंथहा चेन्नराणां हि मासप्रवेशे विधत्ते ॥३॥

मुंथा मासप्रवेश में तृतीय स्थान में हो तो नानाप्रकारके विलास अपने वर्गीय मनुष्योंसे सुख तथा भाईसे सुख पुरुषार्थकी वृद्धि राजासे धनका लाभ करे ॥३॥

शरीरे कृशत्वं द्विषद्भिश्च भीतिं धनाभावतां दुःखलब्धिं नितांतम् ।
कृषीणां भयं तुर्ययाते हि मुंथा नराणां हि मासप्रवेशे विधत्ते ॥४॥

मुंथा मास प्रवेश में चतुर्थ स्थान में हो तो शरीर में दुर्वलता शत्रुभय धनकी हानि निरंतर दु:ख खेतीका भय करे ।।४।।

सुपर्वाद्विजार्चारतिं बुद्धिवृद्धिं सुतेभ्योऽतिसौख्यं सदा कीर्तिलाभम् ।
अनेकार्थलब्धिं सुमुंथा सुतस्था नराणां हि मास प्रवेशे विधत्ते ।।५।।

मुंथा मास प्रवेशमें पांचवें भावमें हो तो शुभ पर्व में ब्राह्मणों की पूजा में चित्त हो और बुद्धिकी वृद्धि पुत्रोंसे सुख और कीर्तिका लाभ तथा अनेक कार्योंकी सिद्धि करे ।।५।।

स्वकार्ये रिपुत्वं नरेशाच्च भीतिं गतौजः शरीरं सुपुत्रार्तिवृद्धिम् ।
धनार्त्तिं च चौरादरिस्थानगेंथा नराणां हि मासप्रवेशे विधत्ते ।।६।।

मास प्रवेशमें मुंथा छठे भाव में हो तो अपने कार्य में शत्रुता राजासे भय शरीर में बलकी हानि पुत्रको पीडा चौरसे धनकी हानि करे ।।६।।

अनेकाधिपीडां कलत्रांगकष्टं विनाशं धनस्याथ लोके रिपुत्वम् ।
स्वदेहे च पीडां मदस्थानगेंथा नराणां हि मासप्रवेशे विधत्ते ।।७।।

मुंथा मास प्रवेशमें सप्तम भाव में हो तो अनेक प्रकारसे मानसी चिंता स्त्रीको कष्ट धनका नाश मनुष्योंसे शत्रुता और अपने शरीर में पीडा करे ।।७।।

बलेभ्यो धनेभ्यो भयं रोगवृद्धिं रिपुत्वं स्वकार्ये धनाभावमुग्रम् ।
सदा भार्व्यांचिता वसुस्थानगेंथा नराणां हि मासप्रवेशे विधत्ते ।।८।।

मुंथा मास प्रवेशमें अष्टम भाव में हो तो बल और धनका भय रोगकी वृद्धि अपने वृद्धिसे शत्रुता धनकी हानि सदैव चिंता मनुष्योंको होवे ।।८।।

प्रसिद्धं प्रचंडं स्वपुत्रादिशक्तिं सुखप्राप्तिमात्मीयलोकान्नितांतम् ।
महाभाग्यतामित्थिहा भाग्ययाता नराणां हि मासप्रवेशे विधत्ते ।।९।।

मुंथा मास प्रवेश में नवम भाव में हो तो प्रसिद्ध बहुत अपने पुत्रादिकोंकी शक्ति बढे अपने मनुष्योंसे सुख और महाभाग्यकी वृद्धि करे ।।९।।

महीशादभीष्टार्थलाभं नितान्तं स्वकीयातिसौख्यं कलत्राच्चतोषम् ।
शरीरे सुरूपं च मुंथा नभस्था नराणां हि मास प्रवेशे विधत्ते ।।१०।।

मुंथा मास प्रवेशमें दशम भाव में हो तो राजासे मनोरथकी सिद्धि निरंतर अपने कुटुंवसे सुख स्त्रीका सुख शरीर में सुंदरता मनुष्योंको होवे ।।१०।।

नरेशाद्धनाप्तिं च योषातितोषं परं स्वर्णभूषांबरं वित्तलाभम् ।
सुरार्चारतिं मुंथहा लाभयाता नराणां हि मासप्रवेशे विधत्ते ॥११॥

मुंथा मास प्रवेश में ग्यारहवें भाव में हो तो राजासे धनकी प्राप्ति स्त्रीका सुख उत्तम सुवर्णके गहनोंका तथा वस्त्र और धनका लाभ एवं देवताकी पूजा में प्रीति मनुष्योंको होवे ॥११॥

धरेशाद्भयं वैरितो भीतिमुग्रां व्ययं चातिलोलं कृषीणां भयं च ।
व्ययस्थानगा मुंथहा व्यग्रतां च नराणां हि मासप्रवेशे विधत्ते ॥१२॥

मुंथा मास प्रवेशमें द्वादश भाव में हो तो राजासे और शत्रुसे भय अतिशय खर्च खेतीमें भय और मन में व्यग्रता मनुष्योंको करे ॥१२॥

---

अथ

# सूर्यादिग्रहाणां मासभावफलानि

## तत्रादौ सूर्यफलम्

बहुचिन्तातुरोद्वेगः शिरोऽक्षिवक्त्रपीडनम् ।
बहुरोगोऽङ्गनापीडा मासे लग्नगते रवौ ॥१॥

सूर्य मास में लग्न में हो तो बहुत चिन्ता करके आतुरता चित्त में उद्वेग मस्तक नेत्र और मुख में पीडा तथा स्त्रीके शरीर में पीडा करे ॥१॥

रिपुराजानलैश्चौरैर्विवादे वा धनव्ययम् ।
कुटुंबकलहं चैव द्वितीये दिवसाधिपे ॥२॥

सूर्य मासमें द्वितीय भावमें हो तो शत्रुसे, राजासे, अग्निसे और चौरसे झगडेमें धनकी हानि और कुटुंबसे कलह होय ॥२॥

धर्मवृद्धिमनारोग्यं परमैश्वर्यसंपदाम् ।
स्त्रीपुत्रमित्रके सौख्यं तृतीयस्थे दिवाकरे ॥३॥

सूर्य मासमें तृतीय भावमें हो तो धर्मकी वृद्धि, रोगका नाश, धन संपदाकी वृद्धि स्त्री, पुत्र और मित्रको सुख करे ॥३॥

दुष्टस्वजनविद्वेषं भयं भूपालसंभवम् ।
चतुष्पदमनुष्याणां क्षयं सूर्ये चतुर्थगे ॥४॥

सूर्य मासमें चतुर्थ भावमें हो तो दुष्टोंसे और मित्रोंसे लडाई और राजासे भय तथा पशु और मनुष्योंको पीडा करे ॥४॥

पुत्ररुक्कामिनीकष्टं निर्धनं मतिमूढता ।
मित्रवैरं वपुःपीडा मासे पंचमगे रवौ ॥५॥

सूर्य मासमें पंचम भावमें हो तो पुत्रको कष्ट स्त्रीको कष्ट धनकी हानि बुद्धिकी हानि मित्रसे वैर देहमें पीडा करे ॥५॥

धनागमस्तथैश्वर्यं राजमान्यं रिपुक्षयम् ।
सौख्यं पुत्रकलत्रादौ षष्ठः प्रद्योतनो यदि ॥६॥

सूर्य मासमें छठे भावमें हो तो धनका लाभ ऐश्वर्यकी वृद्धि राजासे मान शत्रुनाश स्त्री पुत्रका सुख करे ॥६॥

बस्तिकुक्षिशिरोरोगं स्त्रीपीडा नगराटनम् ।
धनहानिप्रदो द्यूने भास्करो नियतो नृणाम् ॥७॥

सूर्य मासमें सप्तम भावमें हो तो गुदामें, उदरमें, मस्तकमें रोग स्त्रीको पीडा, परदेश यात्रा, धनकी हानि करे ॥७॥

बस्तिरुग्धनहानिश्च देहे रोगसमुद्भवः ।
पित्तरुक्नृपतेर्भीतिर्मासे चाष्टमगे रवौ ॥८॥

सूर्य मासमें अष्टम भावमें हो तो गुदामें रोग, धनकी हानि, शरीरमें रोग, पित्तकी पीडा और राजासे भय करे ॥८॥

जायापुत्रविवादं च मतिर्धर्मक्रियादिषु ।
चित्तोद्वेगाकुलं नित्यं नवमे तपनो यदि ॥९॥

सूर्य मासमें नवम भावमें हो तो स्त्रीपुत्रसे कलह धर्म कर्ममें चित्त लगे मनमें उद्वेगता करे ॥९॥

राजमुद्रादिकं सौख्यं शिवं भाग्यं सुखं धनम् ।
प्रख्यातकीर्तिविस्तारं करोति व्योमगो रविः ॥१०॥

सूर्य मासमें दशम भावमें हो तो राजधनसे सुख, कल्याण, भाग्योदय, सुख, धनका लाभ, विख्यात कीर्त्ति होय ॥१०॥

गोऽश्ववृषादिद्रव्याप्तिः प्रमोदोऽभीष्टवर्गतः ।
नृपप्रसादमारोग्यं मासे लाभगते रवौ ॥११॥

सूर्य मासमें ग्यारहवें भावमें हो तो गौ, अश्व, वृषभ और धनकी प्राप्ति मित्रवर्गोंसे हर्ष तथा आरोग्यता और राजाकी कृपा होवे ॥११॥

दृष्टिरुग्राजपीडा च विद्वेषं बंधुवर्गतः ।
देहे पित्तभवा पीडा सदा सूर्ये व्ययस्थिते ॥१२॥

सूर्य मासमें बारहवें भावमें हो तो नेत्रमें रोग राजपीडा भाइयोंसे शत्रुता शरीरमें पित्तकी पीडा करे। १२॥

---

# अथ चंद्रफलम्

मासकाले विलग्नेंदौ कासश्वासादिपीडनम् ।
वदनाक्षिविकारं च पूर्णे[1] चंद्रे धनागमम् ॥१॥

चंद्रमा मासमें लग्नमें होय तो कास तथा श्वासादिका रोग मुख और नेत्रोंमें पीडा पूर्ण चंद्रमा लग्नमें हो तो धनका लाभ करे ॥१॥

इष्टस्वजनतः सौख्यं धनाप्तिः श्वेतवस्तुतः ।
द्वितीयस्थो यदा पूर्णचंद्रो मासविलग्नतः ॥२॥

चंद्रमा मासमें द्वितीय भावमें हो तो इष्ट मित्रोंसे लाभ होवे और पूर्ण चंद्रमा हो तो श्वेत वस्तुके व्यापारसे धनका लाभ करे ॥२॥

पराक्रमात्सुखप्राप्तिर्बन्धुस्वजनतः सुखम् ।
शरीरे चैवमारोग्यं तृतीये पूर्णचंद्रमाः ॥३॥

चंद्रमा मासमें तीसरे स्थानमें हो तो पराक्रमसे सुखकी प्राप्त और भाई मित्रोंसे सुख और पूर्ण चंद्र हो तो शरीरमें आरोग्य करे ॥३॥

---

१ क्षीणे चंद्रे खलु क्षीणं पूर्णे चेत्स्याच्छुभं फलम् ।
दत्ते क्रूरफलं चैव क्रूरयुक् दृष्टितः सदा ॥१॥

अर्थः–चंद्रमा क्षीण होय तो अशुभ फल देवे पूर्ण चंद्र हो तो शुभ फल देवे और क्रूरग्रहोंसे दृष्ट वा युक्त हो तो दुष्ट फल देवे तथा शुभ ग्रहोंसे दृष्ट युक्त हो तो शुभ फल देवे ॥१॥

सुहृद्बंधुकलत्रादिस्वल्पं चैव धनागमम् ।
गोमहिष्यादिलाभं च चतुर्थे यदि चंद्रमाः ॥४॥

चंद्रमा मासमें चतुर्थ भावमें हो तो मित्र, भाई और स्त्रीका सुख होवे थोरा धनका लाभ, गौ भैंस आदिका लाभ करे ॥४॥

सुतसौख्यं महोत्साहं शरीरे स्यात्सुखं भवेत् ।
करोति पंचमे चंद्रो यदि सौम्यखगेक्षितः ॥५॥

चंद्रमा मासमें पंचम भावमें हो तो सौम्य ग्रहोंसे दृष्ट हो तो पुत्रका सुख उत्सव शरीरमें सुख करे ॥५॥

वातश्लेष्मोद्भवा पीडा विद्वेषो बांधवैः सह ।
नृपचौरोद्भवा पीडा मासे षष्ठे स्थितः शशी ॥६॥

चंद्रमा मासमें छठे भावमें हो तो वात कफकी पीडा तथा भाइयोंसे वैर और राजासे चौरोंसे पीडा होय ॥६॥

स्त्रीसुखं नृपतेर्मानं लाभो ग्रामान्तरे भवेत् ।
वाणिज्यजनमार्गाच्च सप्तमे यदि चंद्रमाः ॥७॥

चंद्रमा मासके सप्तम भावमें हो तो स्त्रीका सुख राजासे मान व्यापार द्वारा मनुष्योंसे अन्यग्राममें लाभ करे ॥७॥

अष्टमे स्वल्पसंतापो द्रव्यनाशसमुद्भवः ।
श्लेष्मादिविविधा पीडा मासकाले निशापतौ ॥८॥

चंद्रमा मासके अष्टम भावमें हो तो चित्तमें साधारण संताप धनका नाश कफ आदिकी कई पीडा करे ॥८॥

नवमे धर्मवृद्धिश्च नृपमान्यं यशोदयम् ।
प्राप्यते विपुलान्भोगान्मासकाले सदा शशी ॥९॥

चंद्रमा मासके नवम भावमें हो तो धर्मकी वृद्धि राजासे मान यशका उदय और वहुतही भोग आदिकी प्राप्ति होय ॥९॥

लाभं सौख्यं प्रमोदं च राजपूजा रिपुक्षयम् ।
जायापुत्रादिकं सौख्यं मासे च दशमे शशी ॥१०॥

चंद्रमा मासके दशम भावमें हो तो लाभ सुख और हर्ष होय राजासे मान शत्रुका नाश स्त्री पुत्रका सुख करे ॥१०॥

**श्वेतवस्त्रतुरंगादिलाभं भूपालसम्भवम् ।**
**श्वेतक्रय्याणकाल्लाभो मासे लाभस्थितः शशी ॥११॥**

चंद्रमा मासके ग्यारहवें भावमें हो तो श्वेत वस्त्र, अश्व और राजासे लाभ तथा श्वेत वस्तुके व्यापारसे लाभ होय ॥११॥

**द्रव्यव्ययो रिपूत्पत्तिर्नेत्ररुक्कलहो गृहे ।**
**दत्ते चित्तोद्भवा चिंता व्ययगो मासचंद्रमाः ॥१२॥**

चंद्रमा मासके बारहवें भावमें हो तो धनका खर्च शत्रुकी उत्पत्ति नेत्रोंमें रोग घरमें कलह चित्तमें चिंता करे ॥१२॥

---

# अथ भौमफलम्

**मूर्ध्नि वक्त्राक्षिरोगं च कलहं च धनक्षयम् ।**
**रक्तपित्तप्रकोपं च मासे भौमो विलग्नगः ॥१॥**

मंगल मासके लग्नमें हो तो मस्तकमें मुखमें नेत्रमें रोग तथा कलह धनका खर्च और रक्त पित्तका रोग होवे ॥१॥

**वह्निचौरनृपादिभ्यो भयं च विभवव्ययम् ।**
**शोकं क्रूरा मतिः कष्टं धनस्थे भूमिनंदने ॥२॥**

मंगल मासके द्वितीय भावमें हो तो अग्नि, चोर और राजासे भय धनका खर्च चित्तमें शोक क्रूरता कष्ट करे ॥२॥

**नृपमान्यं धनप्राप्तिर्मित्रलाभं रिपुक्षयम् ।**
**गृहे महोत्सवो नित्यं तृतीये भूमिनंदने ॥३॥**

मंगल मासके तृतीय भावमें हो तो राजासे मान-धनका लाभ मित्र लाभ शत्रुका नाश घरमें उत्सव सर्वदा होवे ॥३॥

**देशाटनं च कष्टं च भयं भूपालसंभवम् ।**
**कुटुंबकलहं चैव यदि तुर्ये महीसुतः ॥४॥**

मंगल मासके चतुर्थ भावमें हो तो विदेश यात्रा शरीरकष्ट राजभय और कुटुंबमें कलह करे ॥४॥

पुत्ररुक्कामिनीकष्टं निर्धनत्वं च मूढता ।
मित्रभीतिर्वपुः कष्टं मासे पुत्रे च भूमिजे ॥५॥

मंगल मासके पांचवें भावमें हो तो पुत्र तथा स्त्रीको कष्ट धनकी हानि बुद्धिभ्रम मित्रभय और शरीरमें कष्ट करे ॥५॥

इष्टस्वजनतः सौख्यं धनलाभं रिपुक्षयम् ।
प्रमोदं नृपतेर्मान्यं षष्ठस्थानगते कुजे ॥६॥

मंगल मासके छठे भावमें हो तो इष्ट मित्रसे सुख धनका लाभ शत्रुका नाश मनमें हर्ष और राजासे मान होय ॥६॥

जायाकष्टं तथा हानिः पीडा स्वात्मकलेवरे ।
देशभ्रंशभयं पुंसां कुर्याद्भौमस्तु सप्तमे ॥७॥

मंगल मासके सातवें भावमें हो तो स्त्रीको कष्ट तथा हानि शरीरमें पीडा देशत्याग और भय मनुष्योंको करे ॥७॥

रक्तपित्तप्रकोपं च गुह्यपीडा धनव्ययम् ।
विपत्तिमिष्टवर्गाच्च अष्टमस्थे धरासुते ॥८॥

मंगल मासके आठवें भावमें हो तो रक्तपित्तका रोग गुदामें पीडा धनका खर्च और मित्रपक्षसे आपत्ति होय ॥८॥

पापबुद्धिर्भवेत्पुंसामुग्रं च विभवव्ययम् ।
कलहं बंधुवर्गाच्च नवमस्थे धरात्मजे ॥९॥

मंगल मासके नवम भावमें हो तो पापमें बुद्धि मनुष्योंको बहुत धनका खर्च और बंधुओंमें कलह करावे ॥९॥

व्यापारे धनलाभश्च प्रसादं भूमिपालतः ।
तेजोवृद्धिस्तथा राज्यं यदि भूमिसुतोऽम्बरे ॥१०॥

मंगल मासके दशम भावमें हो तो व्यापार द्वारा धनका लाभ राजाकी प्रसन्नता और तेजकी वृद्धि करे ॥१०॥

जायासुखं पुत्रसुहृत्सुखं च तेजःप्रतापं विभवागमं च ।
शत्रुक्षयं भूमिपतेः प्रसादं लाभालये भूमिसुते नराणाम् ॥११॥

मंगल मासके ग्यारहवें भावमें हो तो स्त्री पुत्र मित्रका सुख तेजकी वृद्धि, प्रतापकी वृद्धि धनका लाभ, शत्रुका नाश और राजाकी कृपा मनुष्योंको होवे।११।

नेत्ररुक्च वपुःकष्टं धननाशं नृपाद्भयम् ।
सुतजायादितोद्वेगं मासे द्वादशगे कुजे ॥१२॥

मंगल मासके बारहवें भावमें हो तो नेत्रमें रोग शरीरकष्ट धनकी हानि राजासे भय और पुत्र स्त्रीसे उद्वेग करे ॥१२॥

---

# अथ बुधफलम्

देहे सौख्यं धियो वृद्धिर्नृपमान्यं यशोदयम् ।
तेजोबलविवृद्धिं च मासे सौम्ये विलग्नगे ॥१॥

बुध मासके लग्नमें हो तो देहमें सुख बुद्धिकी वृद्धि राजासे मान यशका उदय और तेज बलकी वृद्धि करे ॥१॥

शरीरे निरुजे नित्यं द्रव्यलाभं नृणां भवेत् ।
इष्टस्वजनजं सौख्यं रौहिणीजे कुटुंबगे ॥२॥

बुध मासके द्वितीय भावमें हो तो शरीर सुख तथा नित्यही धनका लाभ और इष्ट मित्रोंसे सुख होय ॥२॥

लाभालाभं सुखं दुःखं शत्रुमित्रसमागमम् ।
मासकाले यदा चंद्रे तृतीये कुरुते नृणाम् ॥३॥

बुध मासके तीसरे भावमें हो तो लाभ और खर्च सुख और दुःख तथा शत्रु मित्रका मिलाप करे ॥३॥

मित्रबंधुस्त्रियाः सौख्यं स्वजनस्य समागमम् ।
राजमान्यं तथैश्वर्यं हिबुके चंद्रजे नृणाम् ॥४॥

बुध मासके चतुर्थ भावमें हो तो मित्र भाई और स्त्रीका सुख मित्रका समागम राजमान और ऐश्वर्यकी वृद्धि करे ॥४॥

जायापुत्रादिजं सौख्यं मानं भूपालसंभवम् ।
प्राप्यते विविधैश्वर्यं पंचमे शशिनंदने ॥५॥

बुध मासके पांचवें भावमें हो तो स्त्री पुत्रका सुख तथा राजासे मान और अनेक ऐश्वर्यका प्राप्ति करे ॥५॥

शत्रुवृद्धिं च हानिं च जायापुत्रादिजं भयम् ।
देहे वातोद्भवा पीडा कुर्यात्सौम्यस्तु शत्रुगे ॥६॥

बुध मासके छठे भावमें हो तो शत्रुकी वृद्धि धनहानि स्त्री पुत्रसे भय शरीरमें वातरोगकी पीडा करे ।।६।।

मार्गाल्लाभं तथा सौख्यं वाणिज्याच्च धनागमम् ।
चंद्रजः कुरुते नित्यं मासे सप्तमगे यदि ।।७।।

बुध मासके सप्तम भावमें हो तो मार्गसे व्यापार द्वारा सुख तथा धनका लाभ सर्वदा होवे ।।७।।

लाभं सौख्यं धनप्राप्तिं राजपूजां रिपुक्षयम् ।
विदधात्यष्टमे नित्यं मासे चंद्रात्मजो यदि ।।८।।

बुध मासके अष्टम भावमें हो तो लाभ और सुख तथा धनकी प्राप्ति राजासे मान और शत्रुका नाश नित्यही करे ।।८।।

धर्मबुद्धिं तथारोग्यं जायापुत्रादिजं सुखम् ।
चंद्रजः कुरुते नित्यं मासे तु नवमे यदि ।।९।।

बुध मासके नवम भावमें हो तो धर्ममें वुद्धि शरीरसुख स्त्री पुत्रका सुख नित्यही करे ।।९।।

वाणिज्याद्राज्यसंमानं धनलाभं रिपुक्षयम् ।
बंधुवृद्धिं सदा मासे सौम्यस्तु दशमे नृणाम् ।।१०।।

बुध मासके दशम भावमें हो तो व्यापार द्वारा राजासे मान धनका लाभ शत्रुका नाश और बंधुकी वृद्धि करे ।।१०।।

द्रव्यलाभं तथा रोग्यं पुत्रमित्रादिजं सुखम् ।
शुक्लवस्तुक्रयाल्लाभो लाभस्थाने यदा बुधः ।।११।।

बुध मासके ग्यारहवें भावमें हो तो धनका लाभ आरोग्यता पुत्र मित्र आदिका सुख श्वेत वस्तु व्यापार द्वारा लाभ होवे ।।११।।

स्वल्पलाभं व्ययं नित्यं बहुलं च नृपाद्भयम् ।
स्ववर्गकलहो नित्यं मासे सौम्ये व्ययस्थितः ।।१२।।

बुध मासके बारहवें भावमें हो तो अल्प लाभ और अधिक खर्च राजासे भय तथा कुटुंबमें कलह करे ।।१२।।

---

# अथ गुरुफलम्

सौख्यं पुत्रकलत्राच्च स्वदेहे वातजं भयम् ।
लाभं भूपालसम्मानं देवेज्यो मासलग्नगः ।।१।।

गुरु मासके लग्नमें हो तो पुत्र स्त्रीसे सुख शरीरमें वातरोग धनका लाभ और राजासे सन्मान करे ।।१।।

धनलाभं तथा रोग्यं प्रमोदं बंधुवर्गतः ।
राजवर्गाच्च सम्मानं मासे धनगते गुरौ ।।२।।

गुरु मासके द्वितीय भावमें हो तो धनका लाभ शरीरसुख मित्रोंसे सुख और राजस्थानसे मान आदि फल करे ।।२।।

तृतीयेऽल्पसुखंलाभं सुहृद्बंधुधनागमम् ।
मासे नृणां स्त्रियाः सौख्यं राजसम्मान एव च ।।३।।

गुरु मासके तीसरे भावमें हो तो अल्प सुख मित्र भाई और धनका लाभ और स्त्रीको सुख तथा राजासे मान करे ।।३।।

जायापत्यसुहृत्सौख्यं नृपमान्यं धनागमम् ।
भूमिवाहनविद्याभिश्चतुर्थे मासगे गुरौ ।।४।।

गुरु मासके चतुर्थ भावमें हो तो स्त्री पुत्र मित्रका सुख राजासे मान धनका लाभ और पृथ्वीसे वाहनसे विद्यासे सुख होय ।।४।।

सद्बुद्धिर्मित्रसंप्राप्तिः सौख्यं लाभो भवेन्नृणाम् ।
इष्टमित्रकृतं सौख्यं पंचमस्थे सुरार्चिते ।।५।।

गुरु मासके पंचम भावमें हो तो श्रेष्ठ बुद्धि मित्रमिलाप, सुख और लाभ तथा मित्रसे सुख आदि फल करे ।।५।।

रिपुवृद्धिस्तथोद्वेगो धननाशो बलक्षयः ।
इष्टस्वजनविद्वेषः षष्ठे देवपुरोहिते ।।६।।

गुरु मासके छठे भावमें हो तो शत्रुकी वृद्धि, उद्वेग धनका नाश बलकी हानि और इष्टमित्रोंसे वैर होय ।।६।।

वाणिज्यं व्यवहाराच्च मार्गाच्चैव धनागमम् ।
स्त्रीसुखं राजसन्मानं सप्तमे सुरमंत्रिणि ।।७।।

गुरु मासके सप्तम भावमें हो तो मार्गसे व्यापार द्वारा धनका लाभ स्त्रीका सुख और राजासे सन्मान करे ।।७।।

धनव्ययमनारोग्यं कलहं मित्रवर्गतः ।
वियोगं च प्रवासं च ह्यष्टमस्थे सुरार्चिते ।।८।।

गुरु मासके अष्टम भावमें हो तो धनका खर्च शरीरमें रोग मित्रवर्गसे कलह और कुटुंबसे वियोग विदेश यात्रा होवे ।।८।।

धनलाभो नृपात्सौख्यं धर्मकार्य्यं भवेत्सदा ।
प्राप्नोति विविधान्भोगान्देवेज्ये नवमस्थिते ।९।।

गुरु मासके नवम भावमें हो तो धनका लाभ राजासे सुख सदैव धर्म-कार्य और अनेक प्रकारके भोगोंकी प्राप्ति करे ।।९।।

सत्कीर्तिर्भूभृतां मानं धनलाभं सुहृत्सुखम् ।
गेहे महोत्सवो नित्यं देवेज्यो दशमे यदि ।।१०।।

गुरु मासके दशम भावमें हो तो सुंदर कीर्ति राजासे मान धनका लाभ, मित्र सुख और घरमें महाउत्सव नित्यही करे ।।१०।।

आयुरारोग्यमैश्वर्यं जायापत्यसुहृत्सुखम् ।
नृणां चतुष्पदप्राप्ति देवेज्यो लाभगो यदि ।।११।।

गुरु मासके ग्यारहवें भावमें हो तो आयु आरोग्यताकी वृद्धि स्त्री पुत्र मित्रका सुख और मनुष्योंको पशुओंकी प्राप्ति करे ।।११।।

स्वजनैर्विग्रहो दुःखं क्षयोत्पत्तिर्धनव्ययः ।
प्रवासो नृपतेर्भीतिर्देवेज्ये व्ययसंस्थिते ।।१२।।

गुरु मासके बारहवें भावमें हो तो अपने मनुष्योंसे विग्रहशरीरमें क्षयका दुःख धनका खर्च और विदेश यात्रा तथा राजभय हो ।।१२।।

---

# अथ शुक्रफलम्

सौख्यं लाभं प्रमोदं च कुलवृद्धिर्भवेन्नृणाम् ।
मानं भूमिपतेर्मासे दैत्येज्यो लग्नगो यदि ॥१॥

शुक्र मासके लग्नमें हो तो सुख लाभ हर्ष कुलकी वृद्धि और राजमान मनुष्योंको करे ॥१॥

धनलाभं सुहृद्वृद्धिः स्त्रीसुखं शत्रुसंक्षयम् ।
कांतिवृद्धिर्नृणां मासे दैत्येज्यो धनगो यदि ॥२॥

शुक्र मासके द्वितीय भावमें हो तो धनका लाभ मित्रोंकी वृद्धि स्त्रीसुख शत्रुनाश और शोभाकी वृद्धि करे ॥२॥

तृतीयेऽल्पसुखं पुंसां धनव्ययउपद्रवः ।
विवादं स्वजनैः सार्द्धं मासे दैत्यपुरोहिते ॥३॥

शुक्र मासके तृतीय भावमें हो तो अल्पसुख धनका खर्च और अपने मनुष्योंके साथ विवाद होय ॥३॥

नृपमान्यं तथैश्वर्यमारोग्यं विभवागमम् ।
मित्रस्वजनजं सौख्यं मासे तु हिबुके भृगौ ॥४॥

शुक्र मासके चतुर्थ भावमें हो तो राजासे मान, ऐश्वर्यकी वृद्धि आरोग्यता धनका लाभ स्वजन और मित्रोंका सुख होय ॥४॥

जायापुत्रादिकं सौख्यं सद्बुद्धिर्विभवागमम् ॥
तंत्रोपदेशे कौशल्यं पंचमे भृगुनंदने ॥५॥

शुक्र मासके पंचम भावमें हो तो स्त्री पुत्रका सुख अच्छी बुद्धि और धनका लाभ तंत्रविद्याके उपदेशमें कुशलता करे ॥५॥

वातश्लेष्मभवा बाधा क्षयोत्पत्तिर्धनव्ययम् ।
नृपाद्भयं गृहे कष्टं मासे षष्ठगते भृगौ ॥६॥

शुक्र मासके छठे भावमें हो तो वातकफकी पीडा क्षयरोगकी उत्पत्ति धनका खर्च राजासे भय और घरमें कष्ट होय ॥६॥

दयितापुत्रजं सौख्यं वाणिज्याद्विभवागमम् ।
मार्गाल्लाभं प्रमोदं च सप्तमे भृगुजे नृणाम् ॥७॥

शुक्र मासमें सप्तम भवनमें हो तो स्त्री पुत्रका सुख व्यापारसे धनका लाभ और मार्गसे लाभ और हर्ष होय ।।७।।

अल्पलाभमनारोग्यं जायापुत्रादिपीडनम् ।
धर्मनाशं प्रवासश्च भृगुपुत्रेऽष्टमस्थिते ।।८।।

शुक्र मासके अष्टम भावमें हो तो स्वल्प लाभ शरीरमें रोग, स्त्री पुत्रको पीडा, धर्मका नाश और विदेश गमन करे ।।८।।

शरीरे चैव ह्यारोग्यं सद्बुद्धिविभवागमम् ।
पुत्रजायादिकं सौख्यं नवमे भृगुजे नृणाम् ।।९।।

शुक्र मासके नवम भावमें हो तो शरीरमें आरोग्यता उत्तम बुद्धि धनका लाभ और पुत्र स्त्रीका सुख होय ।।९।।

नृपमानं सुहृत्सौख्यं धनलाभं रिपुक्षयम् ।
सर्वारम्भाः प्रसिद्ध्यन्ति दैत्येज्ये दशमे नृणाम् ।।१०।।

शुक्र मासके दशम भाव में हो तो राजासे मान मित्रका सुख धनका लाभ शत्रुका नाश और कार्योंकी सिद्धि होवे ।।१०।।

जलमार्गाद्धनप्राप्तिस्तथा शुभक्रयाणकात् ।
प्रियागमस्तथा सौख्यं लाभगे भृगुनन्दने ।।११।।

शुक्र ग्यारहवें भाव में हो तो जलके मार्गसे धनकी प्राप्ति तथा शुभ वस्तुके व्यापारमें लाभ प्रियजनोंका समागम और सुख करे ।।११।।

मित्रस्वजनविद्वेषः सन्मार्गे विभवव्ययः ।
निःसंगत्वं प्रवासं च द्वादशे भृगुजे नृणाम् ।।१२।।

शुक्र मासके बारहवें भाव में हो तो मित्र तथा भाइयोंसे वैर अच्छे काम में खर्च साथका छूटना और विदेश गमन करे ।।१२।।

---

# अथ शनिफलम्

कफमारुतकोपं च शिरोजठरपीडनम् ।
इष्टद्वेषं वक्त्रपीडां मासे लग्नगते शनौ ॥१॥

शनि मासके लग्न में हो तो कफ वातकी पीडा शिर पेट में पीडा और मित्रसे वैर तथा मुख में पीडा करे ॥१॥

पीडा वक्त्रे तथा नेत्रे धननाशो नृपाद्भयम् ।
पुत्रजायादिकष्टं च द्वितीये रविनन्दने ॥२॥

शनि मासके द्वितीय भाव में हो तो मुख में और नेत्र में पीडा राजासे भय स्त्री और पुत्रादिकको कष्ट और धनका नाश करे ॥२॥

सर्वदुःखादिमोक्षं च राजमानं धनागमम् ।
मासकाले यदा सौरिस्तृतीये कुरुते नृणाम् ॥३॥

शनि मासके तृतीय भावमें हो तो संपूर्ण दुःख छूट जाय राजासे मान धनका लाभ मनुष्योंको करे ॥३॥

मातृपक्षे भवेत्कष्टं प्रवासं च धनक्षयम् ।
असंतोषो राजपीडा चतुर्थे रविनन्दने ॥४॥

शनि मासके चतुर्थ भाव में हो तो माताके कुल में कष्ट विदेश गमन धनका नाश तृष्णा और राजभय आदि करे ॥४॥

जायापुत्रसुहृत्कष्टं दुष्टबुद्धिर्धनक्षयम् ।
उदरे वातपीडा च पंचमे रविनन्दने ॥५॥

शनि मासके पंचम भाव में हो तो स्त्री पुत्र मित्रको कष्ट बुद्धिका नाश धनक्षय और पेट में बादीकी पीडा होय ॥५॥

देहे सौख्यं द्रव्यवृद्धिः प्रसादो भूमिपालतः ।
स्त्रीपुत्रजनितं सौख्यं मासे षष्ठगते शनौ ॥६॥

शनि मासके छठे भाव में हो तो शरीर सुख द्रव्यकी वृद्धि, राजाकी कृपा स्त्री पुत्रका सुख करे ॥६॥

सततं गमने भीतिः सुहृत्कष्टं धनक्षयम् ।
प्रवासं शत्रुतो भीतिः सप्तमे रविनंदने ॥७॥

शनि मासके सप्तम भाव में हो तो गमन में भय मित्रको कष्ट धनका नाश विदेश यात्रा और शत्रुसे भय होय ॥७॥

रोगपीडा महाव्याधिः पुत्रजायादिपीडनम् ।
व्यसनं द्रव्यहानिश्च मासे तु चाष्टमे शनौ ॥८॥

शनि मासके अष्टम भाव में हो तो शरीरमें रोग व्याधि स्त्री पुत्रको पीडा दुर्व्यसन धन हानि इतने फल करे ॥८॥

जायापुत्रसुहृत्कष्टं धननाशं नृपाद्भयम् ।
दुर्मतिः पापबुद्धिश्च नवमे भास्करात्मजे ॥९॥

शनि मासके नवम भाव में हो तो स्त्री पुत्र मित्रको कष्ट धनहानि राजभय बुद्धिभ्रंश और पाप में वृद्धि होय ॥९॥

व्यापाराद्धनहानिश्च भयं भूपालसंभवम् ।
सुखे दैन्यं प्रवासश्च दशमे रविनन्दने ॥१०॥

शनि मासके दशम भाव में हो तो व्यापारद्वारा धनकी हानि राजासे भय शरीर में दीनता और प्रदेश यात्रा होय ॥१०॥

द्रव्यागमं तथैश्वर्य्यमारोग्यं योषितां सुखम् ।
शूरत्वं नृपतेर्लाभो मासे लाभगते शनौ ॥११॥

शनि मासके ग्यारहवें भावमें हो तो धनका लाभ ऐश्वर्यकी वृद्धि आरोग्यता स्त्रियोंका सुख शूरता और राजासे लाभ होय ॥११॥

पादाक्षिहृदये पीडा द्रव्यनाशं नृपाद्भयम् ।
कलहं बंधुवर्गादौ कुर्यान्मंदो व्ययस्थितः । १२॥

शनि मासके बारहवें भावमें हो तो पगमें नेत्र में छाती में पीडा धनका नाश राजभय और कुटुंब में कलह करे ॥१२॥

---

# अथ राहुफलम्

देहे मरुत्कृता पीडा कलहं विभवक्षयम् ।
पुत्रमित्रादिकं कष्टं राहौ मासविलग्नके ॥१॥

राहु मासके लग्नमें हो तो शरीरमें वात पीडा कलह धनका नाश और पुत्र मित्र आदिकोंको कष्ट करे ॥१॥

धनव्ययं तथा रोगं चिंता बस्त्यादिपीडनम् ।
वक्त्रलोचनपीडा च धनस्थे सिंहिकासुते ॥२॥

राहु मासके धनस्थानमें हो तो धनका खर्च देह में रोग चिंता गुदामें पीडा और मुख तथा नेत्र में पीडा करे ॥२॥

**राजमानं तथैश्वर्यमारोग्यं विभवागमम् ।**
**शत्रुक्षयं सुहृत्सौख्यं राहौ मासे तृतीयके ॥३॥**

राहु मासके तृतीय भाव में हो तो राजासे मान ऐश्वर्यकी वृद्धि आरोग्यता धनका लाभ शत्रुनाश और मित्रसे सुख करे ॥३॥

**चिंता दुःखं प्रवासश्च प्रवादः स्वजनैः सह ।**
**चतुष्पदाः क्षयं यांति राहुस्तुर्यगतो यदि ॥४॥**

राहु मासके चतुर्थ भाव में हो तो चिंता दुःख प्रवासगमन मित्रों से विवाद और पशुओंका नाश हो यह फल करे ॥४॥

**पुत्रादिभ्यो महापीडा दुर्मतिर्बंधुविग्रहः ।**
**नियतं जठरे पीडा सैंहिकेयो तु पंचमे ॥५॥**

राहु मासके पांचवें भाव में हो तो पुत्रादिकोंको पीडा दुर्मति भाईसे विग्रह और उदर में पीडा करे ॥५॥

**नृपप्रसादमारोग्यं धनलाभो रिपुक्षयम् ।**
**कलत्रपुत्रजं सौख्यं मासे षष्ठे विधुंतुदे ॥६॥**

राहु मासके छठे भाव में हो तो राजाकी प्रसन्नता शरीरमें सुख धनका लाभ शत्रु नाश और स्त्री पुत्रका सुख करे ॥६॥

**प्रवासं पीडनं चांगे स्त्रीकष्टं पवनोत्थरुक् ।**
**कटिबस्तौ भवेत्पीडा सैंहिकेये च सप्तमे ॥७॥**

राहु मासके सप्तम भाव में हो तो विदेश वास देह में पीडा स्त्रीको कष्ट वातरोग और कमर तथा गुदा में पीडा करे ।।७।।

**धनव्ययं तथा रोगं विवादो बंधुभिः सह ।**
**स्त्रीकष्टश्च प्रवासश्च राहुरष्टमगो यदि ।।८। ।**

राहु मासके अष्टम भाव में हो तो धनका खर्च देह में रोग भाइयोंसे विग्रह स्त्रीको कष्ट और विदेशमें वास करे ।।८।।

**विद्वेषश्च वपुःपीडा दैन्यं राजभयं भवेत् ।**
**धर्मकार्ये विलंबश्च राहुर्धर्मगतो यदि ।।९।।**

राहु मासके नवम भावमें हो तो वैर देहमें पीडा दीनता राजासे भय और धमकार्यमें विलंव इतने फल करे ।।९।।

**भूमिनाशो भयं नित्यं देहपीडा धनक्षयः ।**
**इष्टस्वजनविद्वेषं राहौ दशमसंस्थिते ।।१०।।**

राहु मासके दशम भावमें हो तो पृथिवीकी हानि भय देहमें पीडा धनका नाश और इष्ट मित्रसे वैर होय ।।१०।।

**शरीरारोग्यमैश्वर्यं स्त्रीसुखं विभवागमम् ।**
**संकीर्णवर्णतो लाभो राहुर्लाभगतो यदि ।।११।।**

राहु मासके एकादश भावमें हो तो शरीरसुख ऐश्वर्यवृद्धि स्त्रीसुख धनका लाभ और नीच वर्णसे लाभ होय ।।११।।

**धनव्ययं च कष्टं च राजपीडा रिपूदयः ।**
**जायापीडा भवेन्नित्यं स्वर्भानुर्द्वादशे यदि ।।१२।।**

राहु मासके बारहवें भावमें हो तो धनका खर्च शरीरकष्ट राजासे पीडा शत्रुका उदय स्त्रीको पीडा करे ।।१२।।

**इत्येवं हायनफलं संक्षेपेण समीरितम् ।**
**ग्रंथान्तराद्विशेषोऽपि विज्ञेयः प्राज्ञपुंगवैः ।।१३।।**

यह संक्षेपसे वर्षफल मैंने कहा है श्रेष्ठ बुद्धिमान् विद्वान् अन्य ग्रंथोंद्वारा विशेष फल जान लेवें ।।१३।।

**ज्योतिःशास्त्रानुसारेण कृतो हायनभास्करः ।**
**अनेन प्रीयतां देवो गिरिजापतिरव्ययः ।।१४।।**

ज्योतिष शास्त्रके अनेक ग्रंथोंके आधारसे मैंने यह "हायनभास्कर" ग्रंथ किया है इससे अविनाशी भगवान् सदाशिवजी प्रसन्न हो ।।१४।।

---

# ग्रंथकर्तुः प्रशस्तिः

**पुरा बभूवात्र वसिष्ठनामा मुनिस्तनूजो नलिनासनस्य ।**
**श्रीरामचंद्रस्य पुरोहितोयः श्रीयोगवासिष्ठमवोचदस्मै ।।१।।**

पहले ब्रह्मदेवके वसिष्ठनामा पुत्र हुये जो कि श्रीरामचंद्रजीके कुल-पुरोहित भये और उनको योगवासिष्ठका उपदेश किया ।।१।।

**एतस्य वंशे प्रथितो भवानीप्रसादगौडद्विजवर्य्य आसीत् ।**
**ग्रामे तु धौलाख्य उरुप्रसिद्धे श्रीबाणगंगातटमत्स्यदेशे ।।२।।**

उन महर्षिके वंशमें आदि गौडब्राह्मणोंमें श्रेष्ठ भवानीप्रसाद नामक विद्वान् मत्स्यदेशमें श्रीबाणगंगाके तटपर अतिप्रसिद्ध धौलानाम ग्राममें प्रकट होते भये ।।२।।

अस्याभवद्रामकुमारनामा पुत्रः पवित्रो बुधमाननीयः ।
विद्यार्कविद्योतितचित्तपद्मो यः शंभुभक्त्या दिवसाननैषीत् ॥३॥

उन भवानीप्रसादजीके शुद्ध चित्त विद्वानोंमें मान्य विद्यारूपी सूर्यसे खिला है चित्तरूपी कमल जिनका ऐसे रामकुमारनामक पुत्र हुये जो सदाकाल सदाशिवजीकी भक्ति करके आयुको शेष करते हुये ॥३॥

बभूव तस्यापि सुतः स लक्ष्मीनारायणाख्योद्विजदेवभक्तः ।
अयं सदा शंकरपादपद्मसपर्यया स्वं नयते च कालम् ॥४॥

उन विद्वान्के द्विज देवताओंका भक्त लक्ष्मीनारायणनामक पुत्र हुये जो सदाकाल सदाशिवजीके चरणकमलकी सेवा करके अपने कालको व्यतीत करते हैं ॥४॥

चक्रे हायनभास्करं स विदुषां प्रीत्यै महासुंदरं
मात्सर्यं परिहाय पश्यतु जनो निर्दोषमेतं मुहुः ।
ये निन्दंति खला विदन्ति न गुणं ते वै यथा सैरिभाः
गंधं तामरसस्य नैव हि विदुस्तेनालिनां का क्षतिः ॥५॥

सो वह लक्ष्मीनारायण विद्वानोंकी प्रीतिके वास्ते अति सुंदर इस "हायनभास्कर" ग्रंथको करते भये निर्दोष इस ग्रंथको मत्सरता छोडकरके मनुष्य देखें और जो दुष्ट जन हैं वे यदि निंदा भी करें तो कुछ क्षति नहीं जैसे भैंसा कमलपुष्पकी गंधको नहीं जाने तो उससे भ्रमरोंकी क्या हानि है ॥५॥

सप्ताङ्गाङ्कहिमांशुभिः परिमिते वर्षे शुभे वैक्रमे माघे मासि
वसन्तजिह्मगतिथौ श्रीमज्जयाख्ये पुरे । ग्रंथं हायनभास्करं
विरचितं शंभोकृपालंबनादेतत्पाठकृतां सदैव विदुषां तुष्टा
भवेद्भारती ॥६॥

इति श्रीमद्भवानीशंकरोपासक-लक्ष्मीनारायणपण्डित-
विरचितो हायनभास्करः समाप्तः ।

वैक्रमीय संवत् १९६७ माघशुक्लवसंतपंचमीके मत्स्यदेशांतर्गत जयपुरनामक नगरमें भगवान् भवानीशंकर और महाराजकी कृपासे इस हायनभास्कर ग्रंथको लक्ष्मीनारायण पण्डितने रचा इसका पाठ करनेवाले विद्वानोंपर भगवती शारदाम्बा सदा प्रसन्न होगी ॥६॥

---

टीकाकारप्रशस्तिः

श्रीमन्माधवसिंहभूपतिलकेनातीवसंरक्षिते
विख्याते जयपत्तने क्षितिसुरो श्रीरामचंद्रात्मजः ।
तेनेदं रचितं सतामतिमुदे दुर्गाप्रसादाभिधः ।
ग्रंथं हायनभास्करस्य विमलः टीकां प्रभानामिकाम् ॥१॥

इति श्रीमद्गुर्ज्जरगौडविप्रवंशोद्भवजयपुरवास्तव्यश्रीमद्राम-
चंद्रसूरिसूनुदुर्गाप्रसादविरचिता हायनभास्करग्रंथस्य
हिन्दीटीका समाप्ता ।

---

पुस्तक मिलनेका ठिकाना-

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मी वेङ्कटेश्वर" स्टीम्-प्रेस,
कल्याण-बम्बई.

खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस,
खेतवाडी-बम्बई.

